अथैष सुप्तोत्थ इवाब्जयोनि-
रुत्थाय शम्भोः करुणाकटाक्षान्(त्) ।
तद्भैरवाकारविलोकभीतः
शान्ताकृतिः स्या इति तं ययाच ।।१५।।

प्रीत्यै विधातुर्धृतसौम्यरूपो योऽत्रार्धनारीश्वरतामवाप।
तं नौमि सोमं रुचिरं प्रकामं धृतार्धसोमं कृतभक्तकामम्।।१६।।

## ६. ब्रह्मशिरच्छेदलीला

आसीनं प्रमदेन रत्नपटलीरम्याख्यसिंहासने
ब्रह्माणं सनकादयो मुनिवराः सभ्याः प्रणम्योत्थिताः ।
को नित्यः सचराचरेषु भुवनेष्वस्माभिरप्यन्वहं
ध्येयः को भवतोच्यतामिति पुरा पप्रच्छुरत्यादरात् ।।१७।।

---

इस घटना के उपरान्त कमलयोनि ब्रह्मा मानों सोकर उठे हो, इस तरह भगवान् शिव की कृपादृष्टि से उठ खड़े हुए। अपने सामने इस भयजनक आकार में प्रकट हुए सोम (उमा सहित) स्वरूप को देखकर भयभीत हुए ब्रह्माजी ने उनसे शान्त स्वरूप में प्रकट होने की प्रार्थना की।।१५।।

तब विधाता (ब्रह्मा) जी की प्रीति के लिये जिस सौम्य स्वरूप को भगवान् शिव ने धारण किया, वही इस लोक में अर्धनारीश्वर के रूप में प्रख्यात हुआ। भगवान् महेश्वर के इस उमा-महेश्वर के रूप में अत्यन्त कमनीय, ललाट पर अर्धचन्द्र से सुशोभित, भक्तों की सर्वविध कामनाओं को परिपूर्ण करने वाले अर्धनारीश्वर स्वरूप को मैं प्रणाम करता हूँ।।१६।।

## ६. ब्रह्मशिरच्छेद लीला

नाना प्रकार के अत्यन्त मनोरम रत्नों से जटित सिंहासन पर परम प्रसन्न मुद्रा में विराजमान ब्रह्माजी को घेरकर उस ब्रह्मसभा में सनक, सनन्दन जैसे मुनिप्रवर सभासदों के रूप में बैठे हुए थे। उन्होंने उठकर ब्रह्माजी को प्रणाम किया और आदरपूर्वक पूछने लगे कि इस सचराचर जगत् में नित्य (सदा स्थित रहने वाला) तत्त्व कौन सा है? हमारे जैसे मुनियों के द्वारा भी ध्येय तत्त्व कौन है? पुराने समय की यह बात है।।१७।।

**इन्द्रोपेन्द्रहरादयः स्वहृदये ध्यायन्ति मां यं सदा**
**यः कुर्वे भुवनोदयस्थितिलयान् यः सर्वनिर्वाहकः ।**
**यं मां सर्वजना वदन्ति विबुधज्येष्ठं परब्रह्मणो**
**मत्को वाऽस्त्यधिकः परस्तदखिलैः पूज्योऽहमित्याह सः ।।१८।।**

**मानं तस्य हरिर्विबुध्य रभसादेत्याब्जयोनेः सभां**
**ब्रह्मन् सर्वजगत्पतौ स्मरहरे सर्वाश्रये शङ्करे ।**
**आवाभ्यामधिके सतीह मदतो मानं वृथा मा कृथाः**
**पारम्ये निगमाः प्रमाणमगजानाथस्य चेत्यब्रवीत् ।।१९।।**

**आविर्भूय तदा पुरोऽस्य निगमेष्वालम्ब्य मूर्तिं परां**
**पूज्यः शङ्कर एव सर्वजगदाविर्भावरक्षान्तकृत् ।**
**गर्वान्मा कुरु निन्दनामिति वदत्स्वाकर्ण्य पद्मोद्भवो**
**दृष्ट्वा सभ्यमुखान् विहस्य पुनरप्येवं व्यधाद्धेलनम् ।।२०।।**

---

इन प्रश्नों का उत्तर देते हुए ब्रह्मा जी ने कहा कि इन्द्र, उपेन्द्र (विष्णु), हर (रुद्र) आदि सभी देवता अपने हृदय में सदा मेरा ही ध्यान करते हैं। मैं ही समस्त लोकों की सृष्टि, स्थिति और लय का कर्ता हूँ, मैं ही सबकी मनोकामनाओं को पूरा करता हूँ। समस्त संसार मुझे ही समस्त देवताओं में श्रेष्ठ मानते हैं। मैं ही परब्रह्म का स्वरूप हूँ। मुझसे बढ़कर श्रेष्ठ अथवा गुणज्येष्ठ यहाँ दूसरा कौन है? अर्थात् कोई भी नहीं है। समस्त संसार का एकमात्र मैं ही पूज्य हूँ।।१८।।

ब्रह्माजी की इस तरह की अभिमान से भरी गर्वोक्तियों को सुनकर विष्णु भगवान् बड़े आवेश के साथ ब्रह्माजी की सभा में प्रविष्ट होकर बोले कि हे ब्रह्माजी! समस्त संसार के पति, सभी के आश्रयभूत, कामदेव को भस्म कर देने वाले भगवान् शंकर इस संसार में हम दोनों से बढकर हैं। ऐसी स्थिति में तुम अहंकार में भरकर हेंकडी मत दिखाओ। उन्होंने यह भी कहा कि अगजानाथ (पार्वतीपति) भगवान् शंकर की श्रेष्ठता में समस्त निगमशास्त्र (वेद) प्रमाण हैं।।१९।।

इसके साथ ही वहाँ समस्त वेदशास्त्र अपना-अपना श्रेष्ठ स्वरूप धारण कर ब्रह्माजी के सामने प्रकट हो गये और कहने लगे कि समस्त जगत् के आविर्भाव (सृष्टि), रक्षा (पालन) और अन्त (संहार) के मूल कारण, भगवान्

**साकं भूतगणैः श्मशाननिलयोऽप्याम्नायजालैरसौ**
**यन्नित्यान्वितसर्वमङ्गल इति प्राप्तास्थिचर्माऽपि यत् ।**
**विख्यातो जगदेकपावन इति स्त्रीरूपकार्धाङ्गकोऽ-**
**प्यस्माकं परमः पुमानिति वदाम्येतत्किमित्यद्भुतम् ।।२१।।**

**एवं निन्दनतत्पराम्बुजभवज्ञानान्धकारं तदा**
**भेत्तुं भानुरिवोदितः पशुपतिः पञ्चाननः प्रोज्ज्वलः ।**
**उग्रः पञ्चदशेक्षणो दशभुजो भोगीन्द्रभूषो जटी**
**व्याघ्रीकृद्धर आविरास पुरतो भूतेश्वरः शङ्करः ।।२२।।**

**पञ्चास्यं तमजो निरीक्ष्य पुरतः पञ्चाननत्वं स्वयं**
**सम्प्राप्तुं वदनान्तरं प्रजनयन् गर्वाद्विलोक्याभितः ।**

---

शंकर ही सबके परम पूज्य हैं, आप अहंकारवश उनकी निन्दा न करें। यह सुनकर ब्रह्माजी ने अपने सभासदों की ओर देखा और हँसकर वे पुनः इस तरह से शंकर की अवहेलना (अनादर) करने लगे।।२०।।

यह शंकर भूतगणों के साथ सदा श्मशान में निवास करते हैं, जो समस्त अमंगलों का घर है; तो भी कहा जाता है कि शास्त्रों के अनुसार ये सदा अविनश्वर मंगल को देने वाले हैं। ये सदा अस्थि (अपवित्र हड्डी) और चर्म (चमड़ा) को धारण किये रहते हैं, तो भी इनको समस्त जगत् को पवित्र बनाने वाला कहा जाता है। ये अपने आधे शरीर से स्त्री के रूप को धारण किये रहते हैं, तो भी कहा जाता है कि ये हमारे परम आराध्य पुरुष हैं। मैं यह पूछना चाहता हूँ कि यह सब कैसी अद्भुत बाते हैं।।२१।।

इस तरह से शिव की निन्दा करने में लगे हुए ब्रह्मा जी के अज्ञान रूपी अन्धकार को दूर करने के लिये सूर्य के समान भगवान् पशुपति प्रकट हुए। ये पशुपति अत्यन्त प्रकाशमान पाँच मुखों से सुशोभित थे, इसका स्वरूप अतीव उग्र था, ये [१]पन्द्रह नेत्रों और दस भुजाओं से सुशोभित थे। भोगिपति (शेषनाग) को भूषण के रूप में अपने कण्ठ में पहने, जटाधारी, व्याघ्र के चर्म को वस्त्र के रूप में धारण किये हुए भगवान् भूतेश्वर शंकर उनके सामने प्रकट हो गये।।२२।।

चतुर्मुख ब्रह्माजी ने अपने सामने पाँच मुख वाले इस स्वरूप को देखकर स्वयं भी पाँच मुख वाला बन जाने की इच्छा से एक नये मुख को प्रकट कर लिया और चारों तरफ अहंकार से भरी दृष्टि को दौड़ाते हुए वे सिंह के समान

हर्यक्षं तमिभद्विषं पशुपतिं प्रारब्धवान्निन्दितुं
सुव्यक्तेऽजगजान्तरेऽजगजभिद्द्वेषो न किं हानये ।।२३।।

आधारो जगतां भवान् किल जगुस्त्वामेव वेदाः किल
मन्मुख्याऽमरनायकः खलु परं ब्रह्म त्वमासीः किल ।
इत्युच्चावचहास्यकृत्कमलभूशीर्षं क्रुधा पञ्चमं
चिच्छेद स्वनखाञ्चलैः पुरहरस्तस्यावलेपैः समम् ।।२४।।

शान्ते ब्रह्मणि तत्क्षणं पशुपते मा कृन्धि मूर्ध्नोऽपरा-
नित्यारोद्धुमिव स्वमूर्धसु करान् क्षिप्त्वात्मनिन्दापरे ।
नत्वा पादपयोजयोः स्तुवति यः कारुण्यकस्तं विधिं
सन्तोषं प्रणिनाय दुष्टमदहृत् पायात् कपाली स नः ।।२५।।

---

तेजस्वी नेत्रों वाले, गजासुर का नाश करने वाले भगवान् पशुपति की निन्दा करने में लग गये। अज (बकरी) और गज (हाथी) की तुलना वाले इस अज (ब्रह्मा) और गजभिद् (शंकर) का यह भारी अन्तर वाला परस्पर का द्वेष क्या हानिकर नहीं होगा?॥२३॥

पशुपति की निन्दा करते हुए ब्रह्माजी कहने लगे कि आप तो निश्चय ही इस समस्त जगत् के आधार हैं! यह बात भी प्रसिद्ध है कि समस्त वेदशास्त्र आपकी ही स्तुति करते हैं, गुणगान करते हैं! हमारे जैसे समस्त देवताओं के नायक आप ही हैं! इतना ही क्यों? इस जगत् के मूल आधार परब्रह्म भी तो आप ही थे! इस तरह की उपहास-भरी उल्टी-सीधी बातों से अपना उपहास उड़ाते हुए ब्रह्माजी के अभी हाल में प्रकट हुए पाँचवें मुख को, त्रिपुरों का संहार करने वाले शिवजी ने क्रोध में भरकर अपने नखों से, उनके अहंकार के साथ ही काट डाला॥२४॥

अपने पाँचवें मुख के कटते ही ब्रह्मा शान्त हो गये। तत्क्षण वे बोल उठे कि हे पशुपते ! मेरे अन्य मुखों को आप मत काटिये। इतना कहकर ब्रह्माजी ने अपने सिरों पर इस अभिप्राय से हाथों को रख लिया कि मानों वे इनको कटने से रोक रहे हों। इसके साथ ही वे अपनी निन्दा करने लगे, उनके चरण-कमलों में गिरकर वे करुणामूर्ति भगवान् शिव की स्तुति करने लगे। इस पर करुणासागर शिव ने ब्रह्माजी को सांत्वना देकर सन्तुष्ट किया। इस तरह से दुष्टों के दर्प का हरण करने वाले कपालपाणि भगवान् शिव हमारी रक्षा करें॥२५॥

## ७. भिक्षाटनलीला

भक्तेरात्मनि विष्णुमुख्यविबुधव्रातस्य जिज्ञासया
भोगीन्द्राभरणः सुधांशुविलसन्मौलिर्जटामञ्जुलः ।
धृत्वा ब्रह्मकपालकं निजकरे भिक्षाटनव्याजकः
शम्भुः सुन्दरविग्रहः स्मरपितुर्लोकं प्रतस्थे पुरः ।।२६।।

विष्वक्सेनमथात्र विष्णुभवनद्वारे निरोधोद्यतं
शूलाग्रं गमयंस्ततोऽन्तरगतः शम्भुर्हरेः फालजैः ।
रक्तौघैः सुचिरस्त्रुतैरपि न सन्तृप्ते कपाले स्वयं
तद्भक्त्या सुहितोऽनुगृह्य तमयात् स्वर्लोकपालं प्रति ।।२७।।

भोगीन्द्रशोभी धृतसर्वमङ्गलो
विभूतियुक्तो वृषभेशभासितः ।
आत्मेव भातीन्द्रपुरीति शङ्कर-
स्तां प्राविशद् द्रष्टुमिवात्तकौतुकः ।।२८।।

---

## ७. भिक्षाटन लीला

विष्णु आदि प्रमुख देवाताओं की मेरे प्रति कैसी भक्ति है? इसको जानने की इच्छा से सर्पभूषण, ललाट पर चन्द्रकला को धारण किये, जटाजूटधारी सुन्दर स्वरूप वाले भगवान् शिव अपने हाथ में ब्रह्मकपाल रूपी पात्र को लेकर भिक्षाटन करने के बहाने कामदेव के पिता भगवान् विष्णु के लोक के लिये निकल पड़े।।२६।।

वहाँ पहुँच कर उन्होंने विष्णुलोक के द्वार पर रास्ता रोक कर खड़े हुए विष्वक्सेन को देखा। उसको अपने त्रिशूल से वेधकर भगवान् शंभु विष्णुलोक में प्रविष्ट हो गये। वहाँ विष्णु के कपाल से निरन्तर निकलते हुए रक्तस्राव से जब शिव का वह कपालपात्र नहीं भरा, तो स्वयं विष्णु ही भक्तिभावपूर्वक उनके अनुचर बनकर उनके पीछे-पीछे स्वर्गलोक को जाने को उद्यत हो गये।।२७।।

सर्पराज शेष से जिनका कण्ठ सुशोभित है, समस्त मंगल चिह्नों को जो धारण करने वाले हैं, ललाट आदि स्थानों पर भस्म से सुशोभित, वृषभेश्वर रूपी वाहन पर विराजमान भगवान् शंकर, यह इन्द्रपुरी (स्वर्गलोक) तो मेरी

**गच्छन्तं तमवेक्ष्य सुन्दरतनुं तत्र स्त्रियो मोहिताः**
**काश्चित् त्यक्तनिजक्रिया अनुययुः सोच्छ्वासमुत्कम्पनम् ।**
**काश्चित् तं परिवव्रुरात्तपुलकं सस्वेदमुद्गद्गदं**
**काश्चित् तेन बभाषिरेऽयमपि ताः प्रीताः कटाक्षैर्वधात् ।।२९।।**

**गत्वा शक्रगृहं समर्पयति सद्वस्तूनि भक्त्या हरौ**
**शम्भुस्तं मुदितोऽनुगृह्य विनतं वह्निं तथाऽऽनन्दयन् ।**
**गत्वा संयमिनीं च नारकिगणान् सन्तार्य कालार्चितो**
**धन्यानन्यदिगीश्वरान् विरचयन् प्रीतो हिमाद्रिं ययौ ।।३०।।**

**दृष्ट्वा तत्र शिवं प्रविष्टमुटजं योगिस्त्रियो मोहिता**
**भिक्षां भूरि वितीर्य तत्करतलस्पर्शात् प्रसूतात्मजाः ।**

---

जैसी ही अत्यन्त सुन्दर लग रही है, ऐसा विचार कर उसको देखने के लिये कौतूहलवश उसमें पवित्र हो गये।।२८।।

प्रविष्ट

स्वर्ग में विचरण करते हुए सुन्दर शरीर वाले भगवान् शिव को देखकर वहाँ रहने वाली स्त्रियाँ उन पर मोहित हो गईं। उनके पीछे चलने लगीं। कुछ स्त्रियाँ पुलकांचित होकर पसीने से सराबोर, लड़खड़ाती वाणी से कुछ बड़बड़ाती हुई उनको चारों तरफ से घेर कर खड़ी हो गईं। अन्य स्त्रियाँ उनसे बातचीत भी करने लगीं और भगवान् शिव ने भी उनको अपने कृपाकटाक्षों से प्रसन्न कर दिया।।२९।।

भगवान् शिव के इन्द्र के अन्तःपुर में प्रविष्ट होने पर इन्द्र ने भक्ति-पूर्वक उनको अच्छी-अच्छी वस्तुएँ भेंट कीं और शिव ने भी प्रसन्नतापूर्वक स्वीकार कर उस पर अनुग्रह किया। वहाँ उन्होंने विनम्रतापूर्वक नमन करते हुए अग्निदेव को भी आनन्दविभोर कर दिया। इसके बाद ये यमपुरी भी गये और वहाँ रहने वाले नारकी जीवों का उद्धार किया। यमराज के द्वारा पूजित होने के बाद अन्य दिक्पालों को भी अपने दर्शन से धन्य-धन्य करने के बाद प्रसन्न मुद्रा में अपने गृहस्थान हिमालय जा पहुँचे।।३०।।

वहाँ भिक्षा ग्रहण करने के लिये पर्णकुटी में प्रविष्ट हो रहे शिव को देखकर तपस्वी जनों की गृहणियाँ मोहित हो गईं और वे उनको बार-बार ढेर सारी भिक्षा देने लगीं। भिक्षा देते समय शिव के करतल का स्पर्श होने से उनमें

जातास्तन्मुनयोऽवकर्ण्य पुरभिन्मायानभिज्ञाः क्रुधा
शापं चिक्षिपुरीश्वरे शतमखो दम्भोलिमब्धौ यथा ।।३१।।

भूयस्तैः कलिताभिचारदहनाज्जातान् विभूष्योरगान्
हत्वा व्याघ्रममुष्य चर्म कलयन् धृत्वा मृगं चायुधम् ।
गृह्णन्नर्चिरपोह्य शक्तिमपि योऽपस्मारमूर्धोपरि
युक्तो भूतगणैर्ननर्त विपदं हन्यात् स भूतेश्वरः ।।३२।।

## ८. दक्षिणामूर्तिलीला

ज्ञात्वाऽद्भुतैस्तच्चरितैस्तमीशं
स्तुत्वा चिरं योगिजनो ययाचे ।
क्षन्तव्यमज्ञानविजृम्भितं न-
स्त्वयोपदेष्टव्यमिहेति तत्त्वम् ।।३३।।

---

नाना प्रकार की मनोभावनाएँ जागने लगीं। यह जानकर त्रिपुरों का नाश करने वाले भगवान् शिव की माया को न समझ कर मुनिगण क्रोध के मारे उनको शाप देने लगे, मानो शक्र समुद्र पर वज्र का प्रहार कर रहे हों।।३१।।

वे मुनिगण शाप देकर ही शान्त नहीं हो गये, अपितु शिव के प्रति उन्होंने अनेक प्रकार के अभिचार कर्मों (कृत्यों) का भी प्रयोग किया। उन सबको शिव ने भस्म कर दिया और उस भस्म से उत्पन्न हुए सर्पों को अपना आभूषण बना लिया। व्याघ्र को मार कर उसके चर्म से अपने ओढने का वस्त्र बना लिया। आयुध के रूप में अपने हाथ में मृग को धारण कर लिया। अग्नि की जलाने वाली शक्ति को दूर कर उसे भी ग्रहण कर लिया और अपस्मार व्याधि को अपने सिर पर धारण कर लिया। सभी प्राणियों के स्वामी वह भगवान् शिव अन्ततः भूतगणों के साथ नाचने लगे। वे भगवान् भूतेश्वर हमारी सारी विपत्तियों का नाश करें।।३२।।

## ८. दक्षिणामूर्ति लीला

भगवान् शिव की अनेक अद्भुत लीलाओं की सहायता से उनको पहचान कर और चिरकाल तक उनकी स्तुति करके मुनिगण भगवान् से याचना करने लगे कि हमने अज्ञान के कारण जो आपका अपमान किया, उसे आप क्षमा कर दें और हमें यथार्थ तत्त्व का उपदेश करें।।३३।।

**कपालं दत्त्वेशः सदयहृदयो भैरवकरे**
**क्षपानाथापीडः कटितटकलच्चर्मवसनः ।**
**जटी व्यालोत्तंसो वटतरुतटेऽबोधयदलं**
**मुनिभ्यस्तत्त्वं यः स दिशतु मम ज्ञानमधिकम् ।।३४।।**

## ९. कङ्कालधारणलीला

**पूर्वं कैटभयुङ्मधौ श्रुतिगणान् हृत्वा निमग्नेऽर्णवे**
**क्षीणेष्वध्वरहव्यकव्यनियमेष्वभ्यर्थितेनामरैः ।**
**आज्ञप्तो गिरिशेन दानवरिपुर्मत्स्याकृतिर्वारिधिं**
**गत्वा तं दनुजं निहत्य निगमाल्लँब्ध्वाऽमरेभ्यो ददौ ।।३५।।**

**ततस्तस्मिन् मत्स्ये लुठति मदधै(तो) घोरमुदधौ**
**सुरेभ्यः शृण्वन् सन् द्रुतमवनिमासन्नविपदम् ।**

---

मुनिगण की इस प्रार्थना को सुनकर महेश्वर का हृदय दया से भर उठा। अपने हाथ के कपालपात्र को उन्होंने भगवान् भैरव को सौंप दिया। चन्द्रकला से सुशोभित, कमर पर व्याघ्रचर्म को धारण करने वाले, जटाजूटधारी, सर्पभूषण भगवान् शिव ने तब उन मुनियों को वट वृक्ष की छाया में बैठकर तत्त्व का भरपूर उपदेश किया था। वे हमें भी ज्ञान का उपदेश करें।।३४।।

## ९. कङ्कालधारण लीला

पुराने समय की बात है कि मधु और कैटभ नामक राक्षस वेदों का अपहरण कर समुद्र में छिप गये। वेदों के अभाव में यज्ञ-याग आदि का देवों और पितरों के निमित्त किये जाने वाले हव्य एवं कव्य आदि के नियमों का नाश होने लगा। उस समय देवताओं की प्रार्थना को सुनकर गिरिजापति शिव की आज्ञा पाकर दानवों के शत्रु भगवान् विष्णु ने मत्स्यावतार धारण कर समुद्र में प्रवेश किया। वहाँ पहुँच कर उन्होंने मधु और कैटभ को मार कर वेदों का उद्धार किया और उनको लाकर देवताओं को सौंप दिया।।३५।।

बाद में भगवान् शिव ने देवताओं से यह सुनकर कि वह मत्स्य तो समुद्र में बहुत उत्पात मचा रहा है और उसके कारण इस पृथ्वी पर बड़ा भारी संकट आने वाला है। उस समय भगवान् शंभु तुरन्त वहाँ पहुँचे और बिना विलंब किये क्षण भर में उस मत्स्य को मार डाला। तब उसके कंकाल को अपने हाथों

उपेत्याब्धिं शम्भुस्तमनिमिषमाहत्य च करे
दधत् तत्कङ्कालं जयतु जगदानन्दचरितः ।।३६।।

## १०. विषधारणलीला

जात्वारुह्य गजं पुरा पुरपथे शक्राय सङ्गच्छते
दुर्वासाः प्रददौ मुदा पुरभिदो माल्यं प्रसादात्मकम् ।
जिष्णुस्तत्प्ररिगृह्य मूर्धनि दधे नागस्य सम्पन्मदात्
तद्धस्तेन गजोपकृष्य चरणेनाधः पिपेष क्षणात् ।।३७।।

दृष्ट्वेदं कुपितस्य तस्य यमिनः शापात् तदा नाकिनां
सम्पद्राक्षसनायकेन बलिना प्राप्ताऽथ देवव्रजः ।
नीत्वा मन्दरकन्दरे बहुदिनान्यन्ते विरिञ्चा(ञ्च्य)न्वितो
विष्णोः प्राह स यातु सिन्धुमथने श्रीः स्याद्व इत्याह स ।।३८।।

देवैस्तैर्गुरुसन्धिवश्यदनुजैः साकं भुजङ्गावृतं
क्षिप्त्वा मन्दरमम्बुधौ प्रमथिते तत्रोत्थितादुद्भटात् ।

---

में उठा लिया। इस कंकालधारण की लीला से जगत् को आनन्द से भर देने वाले भगवान् शिव हमें सर्वत्र विजय दिलावें।।३६।।

## १०. विषधारण लीला

पुराने जमाने की बात है कि एक बार इन्द्र अपने ऐरावत हाथी पर चढकर राजमार्ग से जा रहे थे। उस समय दुर्वासा ऋषि ने प्रसन्न होकर इन्द्र को प्रसाद के रूप में माला समर्पित की। इन्द्र ने उसे ग्रहण कर ऐरावत हाथी के मस्तक पर रख दिया। तब उस हाथी ने मतवालापन दिखाते हुए अपनी सूंड से उसे खींचकर तुरन्त अपने पैरोंतले रौंद डाला।।३७।।

यह देखकर क्रोध से भरे मुनि दुर्वासा ने शाप दे दिया और उस शाप के कारण देवताओं की सारी संपत्ति, समस्त ऐश्वर्य दानवों के स्वामी बलि को प्राप्त हो गई। इसके कारण देवताओं को मंदराचल की गुफाओं में छिपकर रहना पड़ा। इसी तरह से बहुत समय बीत जाने पर देवगण ब्रह्माजी को आगे कर भगवान् विष्णु के पास पहुँचे और उनसे समुद्र-मन्थन की प्रार्थना की, जिससे उनकी खोई हुई लक्ष्मी पुनः प्राप्त हो जाय।।३८।।

**क्ष्वेलादुग्रतरात् प्रतप्तभुवनाद्धावत्सु सर्वेषु तत्**
**पीत्वा यो भुवनं ररक्ष तमहं श्रीनीलकण्ठं भजे ।।३९।।**

## ११. चन्द्रधारणलीला

**भूयस्तेषु हराज्ञया जलनिधिं मथ्नत्सु तत्रोत्थितान्**
**श्री-गो-वाजि-गजाप्सर-स्तरुगणान् चिन्तामणिं कौस्तुभम् ।**
**संगृह्य स्वयमर्पितं हरिर्मुखैर्देवैर्विधुं यो मुदा**
**मूर्धालङ्करणं चकार शशिभृन्मौलिः स कुर्यात् सुखम् ।।४०।।**

## १२. जलन्धरवधलीला

**पुरन्दरो जातु रिपोरभावाद्**
**भृशं समासादितबाहुकण्डूः ।**

---

देवगुरु बृहस्पति की सलाह से देवता और दानव मन्दर पर्वत की मथनी और शेषनाग की रस्सी बनाकर समुद्र को जब मथने लगे, तब उस समुद्र से उठे अत्यन्त भीषण उग्रतर विष के ताप से प्रतप्त अपने-अपने भुवनों को छोड़ कर समस्त प्राणी भागने लगे। उस समय उस हलाहल विष को पीकर जिन्होंने इस भुवन की रक्षा की, उन भगवान् नीलकण्ठ का मैं भक्तिभाव से स्मरण करता हूँ।।३९।।

## ११. चन्द्रधारण लीला

भगवान् हर की आज्ञा से देव-दानव गण पुनः समुद्र का मन्थन करने लगे। तब समुद्र में से लक्ष्मी, कामधेनु, उच्चैःश्रवा, ऐरावत, अप्सरा, कल्पवृक्ष, चिन्तामणि, कौस्तुभमणि आदि प्रकट हुए। इनको तो विष्णु, इन्द्र आदि ने अपने लिये रख लिया, किन्तु चन्द्र को इन्होंने भगवान् शंकर को सौंप दिया। शिव ने प्रसन्नमुद्रा से चन्द्रमा को लेकर इसे अपने ललाट का आभूषण बना लिया। वह चन्द्रचूड़ भगवान् शंभु सबको सुख प्रदान करें।।४०।।

## १२. जलन्धरवध लीला

एक समय की बात है कि इन्द्र का जब कोई शत्रु नहीं बचा, तो उसकी भुजाओं में युद्ध के लिये खुजली चलने लगी, अर्थात् युद्ध करने के लिये

हरं ययाचे नमुचिक्षयादि
न युध्यतो मे रिपुरादिशेति ।।४१।।

वर्धिष्णोर्विहिताद् विषल्लयमतिर्जिष्णो न जाने क्वचित्
कश्चिद्वा रिपुकाङ्क्षिणं जगति को भोगी रुजं वाञ्छति ।
अश्रेयोऽर्थनमुत्सृजेदमिति शम्भूक्तेऽपि शक्रे हठं
कुर्वाणे कुबकेशफालदहनात् कोऽपि स्फुलिङ्गोऽपतत् ।।४२।।

तदा शम्भुः सिन्धुं सुरपजयिपुत्राय सुचिरात्
तपस्यन्तं बुद्ध्वा तदभिलषितापूरणधिया ।
स्फुलिङ्गः स्यादेष स्वरधिपरिपू राक्षस इति
तमच्छाचिक्षेपानलकणमथाऽसौ शिशुरभूत् ।।४३।।

---

उसकी भुजाएँ फड़कने लगीं। इन्द्र ने भगवान् शंभु से प्रार्थना की कि नमुचि आदि दैत्यों का नाश हो जाने से अब मैं युद्ध नहीं कर पाता, अत: आप अब यह बतावें कि मैं किसके साथ युद्ध करूं॥४१॥

वर्धिष्णु, अपनी उन्नति की कामना करने वाले जिष्णु, इन्द्र की विष की लता के जैसे अपने ही नाश के लिये पैदा हुई इस बात को सुनकर शिव ने कहा कि मुझे याद नहीं पड़ता कि कहीं भी कोई व्यक्ति स्वयं अपने शत्रु की तलाश में घूमता हो। इस जगत् में कोई भी भोगी व्यक्ति नहीं चाहता कि उसे रोग आकर घेर ले। यह तुम्हारी प्रार्थना उचित नहीं है, इसे तुम छोड़ दो। इस तरह से भगवान् शिव के समझाने पर भी इन्द्र ने जब अपनी हठ नहीं छोड़ी, तब कर्बुर (पिशंग) केश वाले भगवान् शिव के ललाट स्थित अग्निनयन से एक स्फुलिंग बाहर निकल पड़ा॥४२॥

उसी समय भगवान् शिव को सुरपति इन्द्र पर विजय प्राप्त करने की इच्छा से पुत्र की कामना से चिरकाल से तपस्या करते हुए सिन्धु (सागर) की याद आ गई और उसकी अभिलाषा को पूरा करने की इच्छा से उन्होंने संकल्प किया कि मेरे अग्निनेत्र से निकला यह स्फुलिंग इन्द्र के शत्रु के रूप में राक्षस बन जाय। उनकी इस इच्छा के साथ ही यह अग्निकण समुद्र के पास जाकर शिशु (बालक) बन गया॥४३॥

श्रुत्वा तत्पृथुकस्य रोदनमजो ब्रह्माण्डभेदोद्भटं
गत्वाब्धिं च जलन्धराह्वयमथो कृत्वाब्धितुष्ट्यै शिशोः ।
दत्त्वा तज्जनकं विना तदितरावध्यत्वरूपं वरं
चक्रे राक्षसचक्रवर्तिनममुं जालन्धराख्ये पुरे ।।४४।।

सोऽयं जातु जलन्धरोऽथ सदसि क्रूरैः परीतोऽसुरै-
र्देवानां निवहः पुरा स्वपितरं निर्मथ्य रत्नादिकम् ।
जग्राहेत्यवकर्ण्य शुक्रवचनं संरम्भतः सैनिकैः
संयुक्तस्त्रिदशैर्नियुध्य सुचिरं सर्वस्वमाचक्रमे ।।४५।।

देवा युद्धपलायिता विधियुताः श्रीशं शरण्यं गता
इत्याकर्ण्य रणप्रियादथ मुनेः क्रुद्धः स रक्षोऽधिपः ।

---

पैदा होने के साथ ही उस बालक की सारे ब्रह्माण्ड को व्याप्त कर देने वाली रोने की आवाज को सुनकर ब्रह्मा जी ने समुद्र के पास जाकर इस शिशु को देखा और समुद्र को प्रसन्न करने की दृष्टि से उसका नाम जलन्धर रख दिया। साथ ही उसे यह वरदान भी दिया कि अपने पिता के सिवाय दूसरा कोई भी व्यक्ति इसे मार नहीं सकेगा। बाद में उन्होंने जालन्धर नगर में इसको राक्षसों के चक्रवर्ती राजा के रूप में प्रतिष्ठित कर दिया।।४४।।

यह बात प्रसिद्ध है कि यही जलन्धर किसी समय अपनी राजसभा के क्रूर राक्षसगणों से घिरा हुआ जब राज्य कर रहा था, वहाँ अपने पुरोहित शुक्राचार्य से उसे यह जानकारी मिली कि किसी समय देवगण तुम्हारे पिता समुद्र को मथकर इसमें से रत्न आदि को निकाल ले गये थे। इतनी जानकारी मिलने पर वह जलन्धर क्रोध से भरकर अपने सैनिकों को साथ लेकर देवताओं से युद्ध करने के लिये निकल पड़ा। चिरकाल तक देवताओं के साथ युद्ध करने के उपरान्त जलन्धर ने देवताओं की सारी संपत्ति को अपने अधीन कर लिया।।४५।।

जलन्धर के साथ हुए इस युद्ध में देवगण भाग खड़े हुए। वे ब्रह्मा जी को अपने साथ लेकर लक्ष्मीपति विष्णु की शरण में चले गये हैं, कलहप्रिय मुनि नारद से ऐसा सुनकर क्रुद्ध हुआ वह राक्षसों का स्वामी जलन्धर शुम्भ को स्वर्ग का स्वामी बनाकर बड़ी भारी सेना की सहायता से सर्वत्र आतंक

**शुम्भं स्वर्गपतिं विधाय विधृतावष्टम्भसेनान्वितो**
**वैकुण्ठं च निरुध्य भूरि युयुधे सादित्यदैत्यारिणाम् ।।४६।।**

**ततो मत्वा विष्णौ युधि निशिचरं दुर्जयममुं**
**प्रसन्नोऽहं वीर्यादयि सुररिपो ! किं तव हितम् ।**
**वदैतत् ते दद्यामिति वदति युक्त्या स सुरभिद्**
**ययाचे तं विष्णो वश(स) मम वशे सामर इति ।।४७।।**

**तत्प्रार्थनानुगुणमेव सहामरोघै-**
**र्विष्णुर्जलन्धरगृहे निवसन् चिरेण ।**
**ज्ञात्वाथ तं विधिवरादितरैरवध्यं**
**गूढं प्रधाप्य(व्य) गिरिशं शरणं प्रपेदे ।।४८।।**

**श्रुत्वा चारमुखात् सुरापसरणं दैत्याधिपः कोपितो**
**जि(हि)त्वा मां त्रिजगत्पतिं च विनतां (तान्) त्रातुं क ईशो भवेत्।**

---

को फैलाता हुआ वैकुण्ठ तक जा पहुँचा और वहाँ आदित्य (सूर्य) सहित सभी दैत्यारियों (देवताओं) के साथ चिरकाल तक युद्ध करता रहा।।४६।।

उस समय विष्णु के मन में यह विचार आया कि यह राक्षस जलन्धर युद्ध में दुर्जेय है, अर्थात् शिव के वरदान के कारण मैं इसे जीत नहीं सकता। तब उन्होंने युद्ध का रास्ता छोड़कर उसे सांत्वना देते हुए विष्णु बोले कि हे देवशत्रु जलन्धर! तुम्हारे पराक्रम को देखकर मैं प्रसन्न हूँ। तुम अपने कल्याण के लिये क्या चाहते हो? उसे मुझे बताओ, वही मैं तुमको दे दूंगा। भगवान् विष्णु के युक्तियुक्त, सांत्वनाभरे इन वचनों को सुनकर देवताओं के शत्रु जलन्धर ने विष्णु से यह वर मांगा कि आप सभी देवताओं के साथ मेरी अधीनता स्वीकार करें।।४७।।

जलन्धर की इस प्रार्थना के अनुसार ही भगवान् विष्णु समस्त देवगण के साथ उसके गृह में निवास करने लगे। चिरकाल तक इसी तरह से रहते हुए उन्हें मालूम हुआ कि ब्रह्माजी के वरदान के कारण इसको अन्य कोई मार नहीं सकता, वे एक दिन चुपके से वहाँ से निकलकर भगवान् शंकर की शरण में पहुँच गये।।४८।।

जासूसों के मुख से विष्णु के निकल भागने की बात को जानकर वह दैत्यों का स्वामी क्रुद्ध हो उठा और बोला कि मैं तीनों लोगों का स्वामी हूँ।

**इत्युद्घुष्य महेशवैरमिह ते न श्रेयसे स्यादिति**
**संरुद्धो भृगुणापि सैन्यसहितो रौप्याद्रिमाप द्रुतम् ।।४९।।**

**युद्ध्वा घोरतरं चिरं हरगणैर्दृष्ट्वा हतं स्वं बलं**
**क्रुद्धे दैत्यपतौ प्रवर्षति शरान् छित्वाथ तान् तत्क्षणम् ।**
**रूपं तस्य निजं प्रदर्श्य दयया हे वत्स ! ते शौर्यतः**
**प्रीतोऽस्म्यद्य तवेहितं वृणु ददामीत्याह तं शङ्करः ।।५०।।**

**लब्धज्ञाने तदास्मिन्नसुरपरिवृढे मत्कृतागः क्षमस्व**
**जन्मैतन्मे हरेति स्तुतिनमनमुखं याचमाने गिरीशः ।**
**चक्रेणामुं विभिद्य स्वपदलिखितभूजन्मना फालनेत्रे**
**संयोज्याथ प्रहृष्टं सुरगणमकरोद् यः स दद्यात् सुखं नः ।।५१।।**

---

मुझे छोड़कर ऐसा कौन व्यक्ति है? जो अपनी शरण में आये शरणागतों की रक्षा कर सके। इस घोषणा के साथ ही, दैत्यगुरु शुक्राचार्य के समझाने पर भी कि भगवान् महेश्वर के साथ वैर करना ठीक नहीं है, वह जलन्धर अपनी सेना को साथ लेकर शिव के निवासस्थान हिमालय पर द्रुत गति से आक्रमण कर बैठा।।४९।।

वहाँ उसका रुद्रगणों के साथ चिरकाल तक भयंकर युद्ध होता रहा। उसमें अपनी सेना के हुए विनाश को देखकर वह दैत्यपति अत्यन्त क्रुद्ध हो उठा और महेश्वर पर भयंकर वाणों की वृष्टि करने लगा। भगवान् महेश्वर ने उन सबको तत्काल छिन्न-भिन्न कर डाला। बाद में उस पर दया करते हुए उसे अपने वास्तविक स्वरूप को दिखाकर वे बोले कि हे वत्स ! तुम्हारे पराक्रम को देखकर मैं अत्यन्त प्रसन्न हूँ। आज तुम्हें जो कुछ चाहिये माँगो। तुम्हारी इच्छा को मैं अवश्य पूरी करूँगा, ऐसा भगवान् शंकर ने उससे कहा।।५०।।

भगवान् शंकर की वाणी को सुनकर उस जलन्धर को यह ज्ञात हो गया कि मेरे सामने तो साक्षात् शिव ही उपस्थित हैं। समस्त असुर परिवार के साथ वह प्रार्थना करने लगा कि हे भगवन्! मेरे अपराध को आप क्षमा करें, मेरे इस निकृष्ट जन्म से मुझे छुटकारा दिलावें। भगवान् शंकर ने उसकी इस विनीत प्रार्थना को सुनकर चक्र से उसके सिर को काट डाला और अपने पैरों पर लुढ़के हुए उसके शरीर से निकले हुए तेज को पुनः अपने ललाट पर स्थित अग्निनेत्र में मिला लिया। इस तरह से जलन्धर का वधकर भगवान् शिव ने देवताओं को प्रसन्न कर दिया। वे भगवान् महेश्वर हमें भी सब प्रकार का सुख प्रदान करें।।५१।।

## १३. चक्रप्रदानलीला

तुष्टं जात्वथ शङ्करं स्वतपसा स्वामिन् जगत्य(त्यु)द्धत-
क्रव्यादेशजलन्धरक्षयकृते चक्रं त्वया निर्मितम् ।
मह्यं देयमितीन्दिरापरिवृढे स्वं याचमाने हरः
प्रीतोऽस्मै विततार चक्रमतुलं सूर्येन्दुवह्न्यात्मकम् ।।५२।।

अक्षद्यूतविधौ पुरा क्षुपदधीच्योर्जातु जाते रणे
स्वे भक्ते क्षुपभूपतौ प्रणयतश्चक्रं दधीचौ हरिः ।
क्षिप्त्वा तन्मुनिनेशभक्तिबलतश्चक्रे हते तत्कृते
शम्भुं पूजयितुं सहस्रकमलैः प्रारब्धवान् प्रत्यहम् ।।५३।।

कदाचिदेकोनसहस्रपद्मैः
संयोज्य नेत्रं हरिणार्चितो यः ।

---

## १३. चक्रप्रदान लीला

अन्ततः अपनी तपस्या से सन्तुष्ट हुए भगवान् शंकर से इन्दिरा (लक्ष्मी)-पति विष्णु ने याचना की कि हे स्वामिन् ! आपने इस जगत् में अत्यन्त उद्धत बने राक्षसों के अधिपति जलन्धर के वध के लिये जिस चक्र की रचना की थी, उसे आप मुझे दे दीजिये। इस तरह अपने लिये चक्र की मांग करने वाले विष्णु पर प्रसन्न होकर शिव ने उस अनोखे सूर्य-चन्द्र-वह्नि से उत्पन्न चक्र को उन्हें सौंप दिया।।५२।।

पुराने समय की बात है कि पासों (अक्ष) की सहायता से जुआ खेलते समय राजा क्षुप और दधीचि में आपस में झगड़ा खड़ा हो गया। अपने भक्त राजा क्षुप के प्रति स्नेह के कारण भगवान् विष्णु ने दधीचि के ऊपर चक्र से प्रहार किया। भगवान् महेश्वर के प्रति भक्तिभाव से प्राप्त शक्ति के आधार पर मुनि दधीचि ने उस चक्र के प्रहार को निष्फल बना दिया। अपनी इस निष्फलता को देखकर विष्णु पुनः सर्वत्र अप्रतिहत चक्र की प्राप्ति के लिये प्रतिदिन एक हजार कमल-पुष्पों से भगवान् शिव की आराधना करने लगे।।५३।।

इस तरह प्रतिदिन शिव की आराधना में लगे विष्णु ने एक दिन देखा कि एक हजार कमलों में एक पुष्प कम पड़ गया है। उस समय उन्होंने अपने

तुष्टः पुनश्चक्रमदात्पुरेव
श्रीशाय शम्भुः स करोत्वभीष्टम् ।।५४।।

## १४. गजासुरसूदनलीला

कावेरीजन्मशैले कृततपसि मुनौ कुम्भयोनौ कदाचिद्
गन्धर्वः कोऽपि गच्छन् गगनभुवि सहारुह्य वध्वा विमानम् ।
तस्या मूर्धस्य माल्यं तदुपरि विसृजन् गर्वतस्तेन कोपा-
च्छप्तो मत्तो गजः सन् त्रिजगदभिभवन् दुर्जयोऽभूद् वृषाद्यैः ।।५५।।

दिक्ष्वाधाव्य गजासुरे त्रिभुवनान्युच्चावचं हिंसति
देवास्तद्व्यथिता भृशं कमलभू- श्रीशौ शरण्यं ययुः ।

---

नेत्र को ही निकालकर भगवान् शिव को समर्पित कर दिया। उनकी इस उत्कृष्ट भक्ति को देखकर सन्तुष्ट हुए शंभु ने पुनः उन्हें चक्र प्रदान किया। वे भगवान् शिव सबकी मनोकामनाओं को पूरा करें।।५४।।

## १४. गजासुरसूदन लीला

एक समय की बात है कि जब कावेरी नदी के उद्गम-स्थल मलयाचल पर कुंभयोनि (कुंभ से उत्पन्न) मुनि अगस्त्य तपस्या में निमग्न थे, उस समय कोई गन्धर्व अपनी पत्नी के साथ विमान पर चढ़कर आकाश मार्ग से जा रहा था। अहंकारवश उसने अपनी पत्नी के गले की माला को मुनि अगस्त्य के ऊपर डाल दी। इससे क्रुद्ध होकर मुनि ने उस गन्धर्व को शाप दे दिया। उस शाप के कारण वह मदमत्त हाथी बन गया और तीनों लोगों में आतंक मचाने लगा। वह नन्दीश्वर आदि से भी दुर्जेय हो गया।।५५।।

यह गजासुर सभी दिशाओं में दौड़ता हुआ सारी त्रिलोकी को अपने आक्रमण से रौंदने लगा। उसके इन हिंसक आक्रमणों से अत्यन्त पीडित हुए देवगण कमलजन्मा ब्रह्मा और श्रीपति विष्णु की शरण में पहुँचे। अपने पूरे पराक्रम के साथ ब्रह्मा और विष्णु गजासुर के साथ चिरकाल तक युद्ध करते रहे, किन्तु अन्ततः गुजासुर ने इन दोनों को परास्त कर दिया। तब वे कालहर,

तौ तेनातिबलान्वितौ चिरतरं युध्वाऽमुना निर्जितौ
गत्वा कालहराय तस्य चरितं विज्ञापयामासतुः ।।५६।।

तच्छ्रुत्वा रभसादुपेत्य करिणं बाणेन भित्वा गले
गन्धर्वेण ततो निजाकृतिजुषा सम्प्रार्थितस्तत्क्षणात् ।
दत्त्वास्मै गणतां गजासुरहतेश्चिह्नं तदीयत्वचं
धृत्वा यः प्रमदान्ननर्त दिशतु श्रेयः स चर्माम्बरः ।।५७।।

## १५. दक्षाध्वरध्वंसलीला

दक्षो जातु विधिं समेत्य भगवन् द्रष्टुं सुतां मां पुरा
रौप्याद्रिं गतमीश्वरोऽतिविभवश्चक्रे न लक्ष्यं दृशोः ।
एतस्मादवमन्तुमध्वरमहं कर्तुं यते तं विने-
त्यालोच्याब्जजसम्मतीकृतसुरैर्यष्टुं समारब्धवान् ।।५८।।

---

काल के भी महाकाल भगवान् शंकर के पास जाकर गजासुर के दुष्कृत्यों का वर्णन करने लगे।।५६।।

ब्रह्मा और विष्णु से गजासुर की उद्दण्डता को सुनकर भगवान् शिव अत्यन्त तीव्र गति से गजासुर के पास पहुँचे और उसके गले को बाण से बींध डाला। इसके साथ ही वह गन्धर्व अपना स्वरूप धारण कर वहाँ से निकला और अपनी प्राणरक्षा की प्रार्थना करने लगा। आशुतोष भगवान् ने उस पर प्रसन्न हो अपने गणों में उसे मिला लिया। गजासुर के वध के चिह्न के रूप में उन्होंने उस गज के चर्म को वस्त्र के रूप में धारण कर लिया और खुशी के मारे नाचने लगे। वह चर्माम्बरधारी भगवान् शिव सबका कल्याण करें।।५७।।

## १५. दक्षाध्वरध्वंस लीला

किसी समय दक्ष प्रजापति ब्रह्माजी के पास जाकर बोले कि हे भगवन् ! एक बार जब मैं अपनी पुत्री से मिलने हिमालय गया था, तब महेश्वर शिव अपने वैभव के मद में भरकर मेरी तरफ कोई ध्यान नहीं दिया। इस अपमान का बदला लेने के लिये मैं एक ऐसा यज्ञ करना चाहता हूँ, जिसमें उनको न बुलाया जाय। इस पर ब्रह्माजी की स्वीकृति मिल जाने पर सभी देवताओं की सहायता से दक्ष प्रजापति यज्ञ का अनुष्ठान करने में लग गये।।५८।।

दाक्षायण्यथ नारदेन तदिदं श्रुत्वा पितुर्दुर्मतिं
मार्ष्टुं यज्ञकुटीमुपेत्य बहुधा नश्येन्निरीशः क्रतुः।
तन्मा मेति निवारितेऽपि गिरिशं दक्षे निनिन्दत्यसौ
त्यक्त्वा तज्जनितं कृधाङ्गमनले जाता हिमाद्रेस्ततः ।।५९।।

ज्ञात्वा तच्चरितं करालविचलद्भ्रूत्रस्तलोके हरे
कोपात् तत्क्षणमग्रतः समुदितं श्रीवीरभद्रं क्रतुम्।
हन्तुं प्रेषयति द्रुतं सरभसाद् गत्वा मखे सङ्गतै-
र्युध्वा ब्रह्ममुखामरैर्बहुतरं व्यद्रावयद् दिक्षु तान् ।।६०।।

धावन्तं मृगरूपतो मुररिपुं भित्वाथ तत्प्रार्थितो
वीरोऽस्याजिनमासनं जपतपोयज्ञोपयोग्यस्त्विति।
दत्वास्मै वरमुत्तमाङ्गमपि दक्षस्य प्रलूयानले
हुत्वा तद्वनितार्थितोऽजशिरसं दक्षं चकार क्षणात् ।।६१।।

---

नारद मुनि से अपने पिता की दुर्गति की इस बात को सुनकर दाक्षायणी, दक्ष प्रजापति की पुत्री सती इस भूल को सुधारने की दृष्टि से अपने पिता की यज्ञशाला में जाकर उन्हें समझाने लगीं कि महेश्वर की उपस्थिति के बिना यह यज्ञ नष्ट हो जायगा। ऐसा नहीं होना चाहिये। सती के बार-बार समझाने पर भी दक्ष प्रजापति जब महेश्वर शंकर की निन्दा करने से नहीं रुके, तब दक्ष प्रजापति से प्राप्त अपने शरीर को सती ने अग्नि को समर्पित कर दिया। इसके बाद हिमालय की पुत्री पार्वती के रूप में सती ने नया जन्म लिया।।५९।।

इस वृत्तान्त को सुनकर भगवान् शंकर की क्रोध के मारे भृकुटि तन गई। इसे देखकर सारा जगत् भय से कांपने लगा और उनकी क्रोधाग्नि से तत्काल उनके सामने वीरभद्र प्रकट हो गये। शिव ने वीरभद्र को दक्ष के उस यज्ञ का नाश कर देने के लिये भेजा। वीरभद्र आवेश में भरकर बड़ी तेजी के साथ वहाँ पहुँचे और उस यज्ञ में संमिलित हुए ब्रह्मा आदि सभी प्रमुख देवताओं के साथ भयंकर युद्ध कर उनको सभी दिशाओं में भगा दिया।६०।।

मृग का रूप धारण कर भागते हुए मुररिपु (मुर नामक दैत्य का वध करने वाले विष्णु) को इन्होंने घायल कर दिया। वीरभद्र ने प्रार्थना करने पर उनको यह वर प्रदान किया कि आज से मृगचर्म का आसन जप, तप, यज्ञ आदि के लिये अत्यन्त पवित्र माना जायगा। इसके बाद क्रुद्ध वीरभद्र ने दक्ष

ततो निवृत्तं सुतवीरभद्रं
हतोद्धसारातिमखं निरीक्ष्य।
प्रीतो य आनन्दयदध्वरारि-
श्चैको विहारी स ममास्तु शम्भुः।।६२।।

## १६. शरभावतारलीला

स्वामिन् क्रूरतरं हिरण्यकशिपुं विष्णुर्नृसिंहात्मना
हत्वा तद्रुधिरं निपीय समदो लोकान् भृशं बाधते।
तद्धिंसां परिहृत्य पाहि जगदित्यभ्यर्थितो निर्जरैः
शम्भुः प्रेषयति स्म जातु नृहरिध्वंसाय वीरं सुतम्।।६३।।

वीरेशो रभसादुपेत्य नृहरिं विष्णोर्जगद्रक्षिणो
नार्हं ते जगदर्दनं जहि जहीत्युक्त्वाप्यशान्तं रणे।

---

के सिर को काट कर यज्ञीय अग्नि में उसकी आहुति दे दी। दक्ष की पत्नी के प्रार्थना करने पर भगवान् शिव ने कटे हुए दक्ष के सिर पर बकरे के सिर को जोड़कर उसे तत्क्षण जीवित कर दिया।।६१।।

इस तरह से दक्ष के यज्ञ का विध्वंस कर वापस आये अपने पुत्र वीरभद्र के इस अद्भुत पराक्रम को देखकर शिव अत्यन्त प्रसन्न हो उठे और उसके पराक्रम की प्रशंसा कर वीरभद्र को आनन्द-विभोर कर दिया। इस प्रकार दक्ष के यज्ञ का विध्वंस कर अकेले विचरण करने वाले शंभु हमें सुख-शान्ति प्रदान करें।।६२।।

## १६. शरभावतार लीला

हे स्वामिन्! (भगवन् शिव)! भगवान् विष्णु ने नृसिंहावतार धारण कर अत्यन्त क्रूर हिरण्यकशिपु को मारकर उसके रुधिर को पीकर मतवाले हो उठे हैं और अब सारे जगत् को भयंकर पीड़ा पहुँचा रहे हैं। उनकी इस हिंसक प्रवृत्ति को रोककर आप इस जगत् की रक्षा कीजिये, इस तरह की देवताओं की प्रार्थना को सुनकर भगवान् शंभु ने अपने पुत्र वीरभद्र को नृसिंहावतार के भय से जगत् के उद्धार के लिये भेजा था।।६३।।

शिव की आज्ञा से वीरभद्र तत्काल बड़ी तेजी से नृसिंह का स्वरूप धारण किये श्रीविष्णु के पास पहुँचे और उनको समझाने लगे कि त्रिलोकी का रक्षण

जित्वा तं शरभात्मना तदजिनं हृत्वार्पयत्यासनं
कृत्वा तत्परमेश्वरः प्रमुदितः पायादपायात् प्रभुः ।।६४।।

## १७. कामदहनलीला

धाता जातु हरिं ननाथ भगवंस्तीव्रं तपस्तारकः
कृत्वा पूर्वमुमेशवीर्यजनितं षाण्मातुरार्भं विना ।
लब्ध्वान्यैरवधार्हतात्मकवरं मत्तः प्रमत्तोऽधुना
लोकानर्दयतेऽस्य नाशविषये साहाय्यकृत् स्या इति ।।६५।।

विष्णुस्तत्र समादिदेश मदनं सूनो ! शिवा मेनका-
पुत्रीभूय सुवर्णकूटशिखरे योगैकनिष्ठं शिवम् ।

---

करने वाले आपका यह जगत् को पीड़ा पहुँचाने वाला कार्य उचित नहीं है। इसे आप छोड़िये-छोड़िये। इतना समझाने के बाद भी जब वे शान्त नहीं हुए, तब वीरभद्र ने शरभावतार धारण कर उनको युद्ध में परास्त किया। इसके उपरान्त वीरभद्र ने व्याघ्रचर्म को लेकर भगवान् शिव को समर्पित किया और परमेश्वर ने प्रसन्न होकर उसे आसन के रूप में ग्रहण किया। ये सबके स्वामी भगवान् शिव हम सबकी अनिष्ट से रक्षा करें।।६४।।

## १७. कामदहन लीला

किसी समय की बात है कि ब्रह्मा ने भगवान् विष्णु से प्रार्थना की कि हे भगवन् ! तारकासुर ने पहले तीव्र तपस्या कर यह वरदान प्राप्त किया था कि भगवान् शिव के वीर्य से उत्पन्न छः माताओं से पालित बालक (स्कन्द) के सिवाय अन्य किसी से न मारा जाऊँ। इस वरदान को प्राप्त कर मदमत्त हुआ वह तारकासुर समस्त लोकों को पीडा पहुँचा रहा है। इसके नाश के विषय में आप हमारी सहायता कीजिये।।६५।।

ब्रह्माजी की बात सुनकर विष्णु भगवान् ने अपने पुत्र कामदेव को आज्ञा दी कि हे पुत्र ! शिवा (भगवती सती) पर्वतराज हिमालय के घर पर मेनका की पुत्री के रूप में नया जन्म लेकर एकमात्र योगसाधना में लगे रहने के अभिप्राय से हेमकूट पर्वत पर तपस्या में निरत भगवान् शिव को पुनः पति के रूप में प्राप्त करने की इच्छा से उनकी सेवा में लगी हुई है। तुम वहाँ जाकर तुरन्त

अञ्चत्यद्य सुरारितारकभिदाहो(हे)तोः कुमाराद्भुतो-
त्पत्त्यर्थं हरमम्बिकामपि मिथः संयोजय द्रागिति ।।६६।।

देवैरप्यथ याचिते रतिपतौ सेनान्विते सम्भ्रमाद्
आगत्यालितती गुणेक्षुधनुषा पुष्पाशुगान् मुञ्चति ।
यः फालेक्षणवीक्षणात् सपदि तं दग्ध्वा विलासेन तद्
भस्मोद्धूलितविग्रहः स्मरहरः कामं प्रकामं क्रियात् ।।६७।।

## १८. गौरीविवाहलीला

पार्वत्यां हेमकूटे चिरकृततपसि त्र्यक्षपाणिग्रहार्थं
तत्रागत्येन्दुमौलिः कपटयतितनुः सन् तदिष्टं विचार्य ।

---

शिव और पार्वती को आपस में मिला दो, जिससे देवशत्रु तारकासुर के वध करने में समर्थ अद्भुत बालक कुमार स्कन्द का जन्म हो सके।।६६।।

रति के पति कामदेव से इस कार्य के निमित्त देवताओं ने भी प्रार्थना की। तब कामदेव ने तुरन्त अपनी सेना के साथ वहाँ से प्रस्थान कर दिया और वहाँ पहुँच गये, जहाँ भगवान् शिव तपस्या में निरत थे। वहाँ पहुँच कर कामदेव जब भ्रमरों की पंक्ति से बनी ज्या (डोरी) को इक्षु (ईख) से बने धनुष पर चढाकर पुष्पों से बने बाण भगवान् शंकर पर छोड़ने लगे, तब उन्होंने खेल ही खेल में अपने ललाट पर स्थित तृतीय नेत्र को खोलकर कामदेव को तत्काल भस्म कर दिया। बाद में उसी भस्म से स्नान कर, अर्थात् उद्धूलन क्रिया से उसे अपने सारे शरीर पर लपेट कर विचरण करने वाले ये कामदहन लीला के नायक महेश्वर हमारी सारी मनोकामनाओं को पूरा करें।।६७।।

## १८. गौरीविवाह लीला

त्रिलोचन भगवान् शिव के साथ विवाह करने की कामना से पार्वती हेमकूट पर्वत पर चिरकाल से तपस्या कर रही थी। वहाँ संन्यासी का कपट वेष धारण कर ललाट पर चन्द्रकला को धारण करने वाले भगवान् शिव पार्वती जी के मनोभावों को जानते हुए प्रकट हो गये। इन्होंने पार्वती से कहा कि हे सुन्दरि! तुम तो अत्यन्त सौम्य स्वभाव की हो, ऐसे में तुम इस भयजनक व्याघ्र के

घोरं चर्माम्बरं भिक्षुकमसमशरध्वंसिनं सुन्दरि त्वं
वाञ्छत्यार्या सतीमं किमुचितमिति तां वक्रवाचा बभाषे ।।६८।।

आर्यायाः सह चैवमेव त्रिनयनापेक्षेति गौर्युत्तरात्
तुष्टो नैजवपुः प्रदर्श्य गिरिशस्तत्प्रार्थितो दर्पकम् ।
भूयो विश्वमनोभुवं नियमयन् पाणिग्रहाङ्गीकृते-
स्तुष्टां तां पितुरालयं प्रगमयन् रौप्याद्रिमाप स्वयम् ।।६९।।

श्रुत्वा सप्तमुनीश्वरैर्हिमवतः स्वस्यागमं तत्क्षणात्
त्वष्टाऽकारि तमाविशन् सह सुरैर्वैवाहिकं मण्टपम् ।
शम्भुः सम्भ्रमतो विवाह्य गिरिजां सन्तोष्य सर्वानुगान्
लीलामारचयत् तया स कुरुतादामोदभूमोदयम् ।।७०।।

---

चर्म को धारण करने वाले, सदा भिक्षाटन में लगे हुए, कामदेव को भस्म कर देनेवाले भस्मधारी शिव को क्यों चाहती हो? क्या यह उचित है? इस तरह वक्रोक्ति से उन्होंने पार्वती से पूछा।।६८।।

इस पर गौरी (पार्वती) ने उत्तर दिया कि मुझे तो इसी तरह के तीन नेत्रों वाले विरूपाक्ष की चाह है। इस उत्तर से सन्तुष्ट हुए भगवान् शिव अपने वास्तविक रूप में वहाँ प्रकट हो गये और गौरी की प्रार्थना पर समस्त प्राणियों के मन में पैदा होनेवाले, अहंकार से भरे कामदेव पर नियन्त्रण स्थापित कर भगवती पार्वती की अपने साथ विवाह करने की प्रार्थना को स्वीकार कर लिया। इस तरह से उनको सन्तुष्ट कर तथा उन्हें उनके पिता के घर पहुँचा कर बाद में स्वयं भी अपने निवास स्थान कैलाश पर्वत पर चले गये।।६९।।

भगवान् शिव ने सप्तर्षियों के माध्यम से हिमवान् को विवाह के लिये अपने आगमन की सूचना भेजी। उस समय त्वष्टा (देवताओं के शिल्पी विश्वकर्मा) ने विवाह के लिये सुन्दर मण्डप का निर्माण किया। उस मण्डप में देवताओं के साथ भगवान् शिव ने उत्साह के साथ प्रवेश किया और गिरिजा के साथ विवाह कर एवं अपने सभी अनुचरों का संमान करते हुए गौरीविवाह की लीला को पूरा किया। वे भगवान् शिव हम लोगों को भी आनन्द की पराकाष्ठा तक पहुँचावें।।७०।।

## १९. कुमारजननलीला

देवाः कृत्वा चिरमथ तपो हृष्टमानम्य शम्भुं
स्वामिन्नद्य प्रबलखलराट्तारकध्वंसनार्थम् ।
त्वद्वीर्येणाऽचलपतिसुतागर्भयोगं विनैव
द्रागुत्पाद्यस्तनय इति तं प्रार्थयामासुरीशम् ।।७१।।

आकर्ण्येदं सरोषां सुरततिरसुता स्यादिति द्राक् शपन्तीं
रुद्राणीं सान्त्वयन् सन् पशुपतिरमराभीष्टसिद्ध्यै स्ववीर्यम् ।
तत्याजैतद् गृहीत्वाऽनिलसुहृदमरैः प्रार्थितो विष्णुपद्या-
मत्याक्षीत् साप्यशक्ता तदथ शरवणं प्रापयामास तीव्रम् ।।७२।।

तस्मिन् वीर्येऽत्र दीप्ते निजसविधजुषां वीक्षितुं कृत्तिकानां
सम्पर्कात् षणमुखाब्जे परिणमति शिशौ यौ तदार्यामहेशौ ।

---

## १९. कुमारजनन लीला

भगवान् शिव को प्रसन्न करने के लिये देवताओं ने चिरकाल तक तपस्या की। तपस्या से संतुष्ट हुए शंभु से उन्होंने प्रार्थना की कि हे स्वामिन्! अत्यन्त दुष्ट स्वभाव के तारकासुर के नाश के लिये पर्वतराज हिमालय की पुत्री के गर्भ धारण के बिना ही आपके वीर्य से अतिशीघ्र पुत्र को जन्म दीजिये।।७१।।

देवताओं की इस बात को सुनकर पार्वती जी बहुत क्रुद्ध हुईं और उन्होंने देवताओं को शाप दे दिया कि उनको कभी भी पुत्र की प्राप्ति न हो। रुद्राणी (क्रोध से भरी भगवती पार्वती) को सांत्वना देने के साथ पशुपति (सभी प्राणियों के स्वामी) शिव ने देवताओं की अभीष्ट की सिद्धि के लिये अपने वीर्य का त्याग कर दिया। इस वीर्य को देवताओं की प्रार्थना पर अग्निदेव ने विष्णुपदी (गंगाजी) में छोड़ दिया। गंगाजी भी उस वीर्य को धारण करने में असमर्थ होकर बड़ी तीव्रता से अपने किनारे पर स्थित शरवण (नरकुल के झुरमुट) में उसे छोड़ दिया।।७२।।

उस शरवण में प्रज्वलित हो रहे शिववीर्य को, यह क्या है? यह देखने की जिज्ञासा से वहाँ पहुँचीं कृत्तिका-नक्षत्रों के, जिनकी संख्या छः होती है, संपर्क से उस तेज ने छः मुख वाले बालक का रूप धारण कर लिया। शीघ्र

द्रागागत्योपलाल्यार्भकमथ मुदितौ तारकं मारयित्वा
तेनादातां सुरालेः सुखमनवरतं तौ शिवौ स्तः शिवाय ।।७३।।

## २०. त्रिपुरदहनलीला

पुत्रास्तारकदानवस्य कमलाक्षस्तारकाक्षाह्वयो
विद्युन्माल्यपि पङ्कजासनवराल्लब्ध्वा महासम्पदम् ।
दुर्जय्ये त्रिपुरे सदाऽभ्रवलने स्थित्वा चिरादुद्धताः
सम्पीड्य त्रिदशान् बलेन जगृहुः स्वाराज्यलक्ष्मीमपि ।।७४।।

तद्धिंसाकान्दिशीते(के) सविधिसुरगणे शम्भुमाश्रित्य भक्त्या
दत्त्वास्मै पाशुपत्यं प्रणमति गिरिशो वासुकिज्यं हरीषुम् ।
संगृह्णन् मेरुचापं निगमहययुतं ब्रह्मसूतं रविग्लौ-
चक्राढ्यं भूशताङ्गं त्रिपुरविदलनामध्यरोक्षच्चिकीर्षुः ।।७५।।

---

ही वहाँ पार्वती और परमेश्वर आ पहुँचे एवं उन्होंने उस बालक का बड़ी प्रसन्नता के साथ लालन-पालन लिया। उस बालक ने यथासमय तारकासुर का वध कर देवगण को सुखसागर से सराबोर कर दिया। अपने पुत्र की सहायता से इस कार्य को सम्पन्न कराने वाले पार्वती-परमेश्वर सबका कल्याण करें।।७३।।

## २०. त्रिपुरदहन लीला

इस तारकासुर के कमलाक्ष, तारकाक्ष और विद्युन्माली नाम के तीन पुत्र हुए। कमलासन ब्रह्मा से वरदान प्राप्त कर ये परम ऐश्वर्य से सम्पन्न हो गये। ये आकाश-मण्डल में निरन्तर चक्कर लगाते दुर्जेय तीन पुरों का निर्माण कर उनमें चिरकाल से निर्भय होकर रहते-रहते उद्दण्ड हो उठे और बलपूर्वक देवताओं को पराजित कर उनकी समस्त स्वाराज्य-लक्ष्मी को छीन लिया।।७४।।

इनके आक्रमण से भय के मारे भाग खड़े हुए देवगण ब्रह्मा जी को साथ लेकर भगवान् शिव के पास पहुँचे और भक्तिपूर्वक उनको समस्त प्राणियों का आधिपत्य प्रदान कर उनको नमन करने लगे। इस पर भगवान् शिव वासुकि की प्रत्यंचा, इन्द्र का बाण और सुमेरु का धनुष बनाकर तथा निगमशास्त्र को अश्व, ब्रह्मा को सूत, रवि-चन्द्र को चक्र और पृथ्वी को रथ के रूप में नियोजित कर त्रिपुरों का नाश करने की इच्छा से उस पर आरूढ हुए।।७५।।

विष्णौ गोरूपतस्तद्धरनमितरथोद्धारिणि द्विट्पुरस्थं
पीत्वा सिद्धं रसौघं (सु)? गततनुधृतेस्तत्पुरः स्त्रीसतीत्वम् ।
भिन्दत्यात्माज्ञयाथो निजगणविजिते राक्षसौघे पुराणि
त्र्यक्षो दग्ध्वा क्षणाद् यस्त्वसुखयदमरान् पातु सोऽस्मान् पुरारिः ।।७६।।

## २१. गङ्गाधारणलीला

शम्भोश्चैत्ररथाह्वयोपवनमाकल्यैकदा मन्दरे
नानाक्रीडनतत्परस्य गिरिजा पश्चाद् गता लीलया ।
नेत्रे छादयति स्म तावदखिलो लोकोन्धकारावृतो
ध्वान्तं ध्वंसयितुं हरेण विवृते फालाक्षिण तेजोऽत्यभूत् ।।७७।।

तावज्ज्वालासहिष्णु त्रिभुवनरुदितैः स्रंशितोमाकराग्रा-
सङ्गत्यक्तेशहर्षाश्रुपयसि रभसाल्लोकमावृत्य भित्त्वा ।

---

इनके भार से जब रथ जमीन में धंसने लगा, तो भगवान् विष्णु ने पृथ्वी का रूप धारण कर उस रथ का उद्धार किया। इसके बाद भगवान् शिव ने शत्रु की नगरियों में स्थित समस्त सिद्ध-रसायन को पी डाला। नास्तिकों ने उनकी स्त्रियों का सतीत्व नष्ट कर दिया। अपने रुद्रगणों के माध्यम से समस्त राक्षसगणों पर विजय प्राप्त कर लेने के उपरान्त शिव ने अपने त्रिनेत्र रूपी बाण से राक्षसों के तीनों पुरों को एक साथ जला डाला। इस तरह देवताओं को आनन्द से भर देने वाले भगवान् त्रिपुरसूदन हमारी रक्षा करें।।७६।।

## २१. गंगाधारण लीला

एक समय की बात है कि मन्दराचल में स्थित चैत्ररथ नामक उपवन में भगवान् शिव नाना प्रकार की क्रीडाएँ कर रहे थे। उसी समय भगवती गिरिजा ने पीछे से आकर खेल-खेल में भगवान् शंकर के नेत्रों को अपने हाथों से बन्द कर दिया। इसके साथ ही समस्त संसार में अन्धकार छा गया। इस अन्धकार को दूर करने के लिये शिव ने अपने ललाट स्थित नेत्र को खोला, तो उससे अत्यधिक तेज निकला।।७७।।

भगवान् शिव के तीसरे नेत्र से निकली तेज की उस ज्वाला को सहन न कर सकने के कारण समस्त भुवन में आक्रन्दन प्रारंभ हो गया और इधर

**विध्यण्डं तस्य बाह्याम्बुनि मिलति सुरैरर्थितो लीलया यो**
**धृत्व(ा)म्भस्तज्जटाग्रे भुवनमसुखयत् पातु गङ्गाधरो नः ।।७८।।**

## २२. अन्धकासुरवधलीला

**पार्वत्या पिहिते गिरीशनयने प्राङ्मन्दरे लीलया**
**यल्लोके प्रचुरं तदान्धतमसं लेभे पलाशाकृतिम् ।**
**ख्यातः सन्नयमन्धकासुर इति स्वर्णाम्बकस्यात्मजो**
**भूत्वा शम्भुवरादथोद्धटतरस्त्रैलोक्यमाविव्यथे ।।७९।।**
**गीर्वाणैः शरणीकृतस्त्रिनयनः स्वं हन्तुमुद्युक्त इ-**
**त्याकर्ण्याजिहितान्मुनेस्तमसुरं सद्योऽभ्यमित्रं रुषा ।**

---

भगवती पार्वती के भगवान् शंकर की आँखों पर से हाथ को हटा लेने पर उनके नेत्रों से भी हर्षाश्रु निकलने लगे। इन अश्रुओं के कारण आई बाढ से सारे भुवन घिर गये। यह अश्रु-जल ब्रह्माण्ड में विद्यमान जल से मिलकर भयंकर विनाश करने लगा। तब देवताओं की प्रार्थना पर भगवान् शंकर एक नई लीला करते हुए उस सारे जल को अपनी जटा में बाँध लिया। इस लीला के कारण ही वे गंगाधर कहलाये और बाढ के भय से त्रिभुवन को मुक्त कर सर्वत्र आनन्द का संचार कर दिया। वे गंगाधर हमारी रक्षा करें।।७८।।

## २२. अन्धकासुरवध लीला

पहले मन्दराचल पर खेल-खेल में पार्वती जी ने जब शंकर के नयनों को अपने हाथों से छिपा लिया था, तब सारे लोक में गहरा अन्धकार छा गया और उसने पलाशपत्र की सी आकृति धारण कर ली। यही बाद में अन्धकासुर के नाम से स्वर्णाम्बक के पुत्र के रूप में प्रसिद्ध हुआ और अपनी तपस्या से भगवान् शिव का वरदान प्राप्त कर अत्यन्त बलशाली होकर त्रिलोकी को कष्ट पहुँचाने लगा।।७९।।

उस समय सभी देवगण भगवान् शिव की शरण में आ गये। वह अन्धकासुर भगवान् शंकर को ही मारने आ रहा है, यह सुनकर भगवान् शंकर तत्काल क्रोध से भर उठे और उस भयंकर शत्रु के नाश के लिये उसके हृदय पर त्रिशूल से प्रहार किया। इस तरह से चल रहे युद्ध में भगवान् शिव ने

**शूलेन प्रहरन् हरः समिति यस्तत्प्रार्थितस्तद्दहृदि**
**नृत्यन् सन् दयया निनाय गणतां पात्वन्धकारिः स नः ।।८०।।**

## २३. मृत्युञ्जयलीला

**श्वेताख्यो नृपतिः पुरा मृगवधासक्तो गृहान्निर्गतो**
**वाणिज्योद्गतरत्नवर्णवणिजः पत्नीं गृहोर्ध्वस्थिताम् ।**
**दृष्ट्वा कामवशान्निकृत्य निशि तामाहूय तत्खेलने**
**पुष्पं प्राह पतगृ(ग्र)हे च्युतमिदं शम्भ्वर्पितं स्यादिति ।।८१।।**

**काले याति महत्यथान्त्यसमये कृष्टः स मृत्योर्भटैः**
**शम्भोरेकसुमार्पणोक्तिसुकृतात् स्वर्नीत एकां निशम् ।**
**रम्भा तं त्वरमाणमात्मविहृतौ दृष्ट्वा हसित्वा नृपं**
**प्रोचे किं क्षणसौख्यतः सुगतये शम्भुं भजेथा इति ।।८२।।**

---

अन्धकासुर की प्रार्थना पर दया करके उसको अपने गणों में स्थान दे दिया। वह अन्धकारि शिव हमारी रक्षा करें॥८०॥

## २३. मृत्युंजय लीला

किसी समय श्वेत नाम का राजा मृगया (शिकार) के लिये जब अपने महल से निकला, तो वह अपने व्यापार के कारण अत्यन्त समृद्ध हुए किसी व्यापारी की अपनी हवेली की अट्टालकी पर चढी पत्नी को देखकर काम के वशीभूत हो गया और रात्रिबेला में उसे बुलाकर उसके साथ कामक्रीडा करने में लग गया। उस समय पीकदान में गिरते हुए पुष्प को देखकर उसने कहा कि यह शिव को समर्पित हो॥८१॥

इस घटना को हुए बहुत समय बीत गया। उसका अन्तिम समय आने पर यमराज के दूत उसे खींच कर ले गये। अपने इस जन्म में इसने भगवान् शिव को एक पुष्प समर्पित किया है, यह जान कर यमदूत उसे एक रात्रि के लिये स्वर्गलोक में ले गये। यहाँ रंभा (अप्सरा) ने एक रात्रि के लिये प्राप्त सुखोपभोग में अपने को भूले हुए राजा से हँस कर कहा कि इस क्षणिक सुख से क्या होगा? तुम अपनी सुगति के लिये भगवान् शिव का भजन करो॥८२॥

**कालादल्पात् कथं स्यात् सुगतिरिति वदन्तं नृपं प्राह रम्भा**
**प्राक्कञ्चिद् म्रीयमाणं शव इति शुनके भक्षणायैत्यपादैः ।**
**स्पृष्ट्वा भस्मावलिप्तैरपसरति भिया सोऽन्त्यकाले स्ववक्त्रे**
**भस्माङ्काद् मृत्युमुक्तः सपदि शिवपदं प्रापितः शम्भुभृत्यैः ।।८३।।**

**वनेचरः कश्चिदलर्ककण्ठे**
**रुद्राक्षमाल्यं प्रणयाद् बबन्ध ।**
**क्रोडाहतोऽसौ शुनकः प्रणीतः**
**कैलासमन्ते शिवचिह्नधृत्या ।।८४।।**

**मृकण्डोः सूनोर्द्वादश वयसि याते रविभुवा**
**विकृष्टः शिश्लेष स्वहृदि शिवलिङ्गं कृतनुतिः ।**

---

थोड़े से समय में सुगति कैसे मिल सकती है? इस तरह से पूछते हुए राजा श्वेत से अप्सरा रंभा बोली कि पुराने समय में किसी मरते हुए व्यक्ति को मरा हुआ समझ कर कोई कुत्ता उसे खाने की इच्छा से उसके पास गया। उस कुत्ते के पैर में भस्म लगी हुई थी। जब वह उसे खाने के लिये आगे बढा, तो उसको जीवित जानकर भय के मारे वह वापस मुड़ा। इसी बीच उसके पैरों में लगी भस्म उस शव के सिर पर अंकित हो गई। इसके साथ ही वह जन्म-मृत्यु के चक्र से मुक्त हो गया और शिव के अनुचरों की सहायता से उनसे तत्काल शिवपद प्राप्त कर लिया।।८३।।

किसी वनवासी ने किसी पालतू कुत्ते (अलर्क) के गले में स्नेह से भरकर रुद्राक्ष की माला पहना दी। जंगली सूअर से मारे जाने के बाद शिव के चिह्न रुद्राक्ष को धारण करने के कारण वह अन्त में रुद्रगणों के द्वारा कैलास पर ले जाया गया।।८४।।

मृकण्डु के पुत्र मार्कण्डेय की आयु बारह वर्ष की निर्धारित थी। समय आने पर रविभू (सूर्यपुत्र यमराज) उसे लेने आ गये। तब मार्कण्डेय ने शिव-लिंग को प्रणाम कर उन्हें अपनी छाती से चिपका लिया। यमराज जब मार्कण्डेय को खींच रहे थे, तभी शिवलिंग से तत्काल गिरिजापति प्रकट हो गये और त्रिशूल के अग्र भाग से यमराज को घायल कर दिया। क्या उन्होंने यमराज

ततोऽत्राविर्भूतः सपदि गिरिशं(शः) शूलशिखया
यमं भित्त्वा भक्तं न किमु चिरजीवित्वमनयत् ।।८५।।

प्राक् सानन्दमुनौ गते यमपुरालोकाय पञ्चाक्षरीं
तेनोक्तामवकर्ण्य नारकिगणः कैलासमापोत्तरम् ।
चण्डाल्या विरहस्पुरा प्रचलितश्चौर्याय शैवालये
दीपद्योतनतो द्विजः शिवपदं कश्चित् कृतोऽन्ते गतः ।।८६।।

इत्युक्ते रम्भयाऽस्मिन् नृप उपकरणैस्तत्प्रणीतैः शिवार्चां
कुर्वाणे शैवचिह्ने रटति यमकराकर्षणात् प्रातरत्र ।
सद्यः प्रादुर्भवन् यः प्रशमितशमनो दृष्टिमात्राद् दिदेश
श्वेतायात्मप्रमोदं स शिव उपनतान् पातु मृत्युञ्जयाख्यः ।।८७।।

---

के हाथ से मार्कण्डेय मुनि को बचा कर उन्हें चिरंजीवी होने का वरदान नहीं दिया था।।८५।।

पुराने समय की बात है कि सानन्द मुनि एक बार यमपुरी को देखने वहाँ गये हुए थे। उस समय उनके मुख से निकले पंचाक्षरी मन्त्र को सुनकर सभी नारकी जीव उत्तम कैलास-पदवी पर पहुँच गये। इसी तरह से अपनी पत्नी चण्डालिनी की मनोकामना को पूरा करने के लिये कोई चण्डाल चौरी करने की इच्छा से किसी शिवालय में पहुँचा। वहाँ उसने दीपक जलाया। इसी पुण्य के प्रताप से पहले उसने द्विजकुल में जन्म लिया और अन्त में उसे शिवपद की प्राप्ति हुई।।८६।।

इस प्रकार रंभा ने स्वल्प काल में ही मुक्ति पाने के अनेक उदाहरण उस श्वेत राजा को सुनाये। राजा तत्काल रंभा के द्वारा इकट्ठी की गई सामग्री से शिव की आराधना में लग गया, भस्म-रुद्राक्ष धारण कर वह पंचाक्षरी मन्त्र का जप करने लगा। प्रात:काल होने के साथ ही यमराज उसे खींचकर नरकलोक में ले जाने वाले थे, किन्तु तत्काल भगवान् शिव वहाँ प्रकट हो गये और आँखों के इशारे से ही उन्होंने यमराज को शान्त कर दिया। इसीके साथ श्वेत को उन्होंने अपने प्रमोद-स्थान कैलास पर पहुँचा दिया। वे भगवान् मृत्युंजय अपनी शरण में आये भक्तों की रक्षा करें।।८७।।

## २४. सुखावहलीला

बुद्ध्वा द्वादशवत्सरं क्षितिरवग्राहाकुला स्यादिति
तद्भीतेरथ दण्डकावनतपश्चर्यापरे गौतमे।
शम्भुः कैतववैष्णवाकृतिमुपेत्येतत्परीक्ष्येच्छया
तत्रागत्य च विप्रलम्भवचनं प्रोचे विनोदादमुम्।।८८।।

किं स्यात् तेऽद्य फलं कपालिभजनाच्छ्रीशाज्जगद्रक्षकात्
प्राप्यं सर्वफलं जनैरिति वदन् अत्र प्रमाणं हरे[ः]।
फालेऽदर्शयदीक्षणं मुनिरसौ नानाप्रकारैर्हरिं
धिक्कृत्याऽभिदधे हरः पर इति स्वाङ्घ्रौ दृशं दर्शयन्।।८९।।

शम्भौ तन्मुनिभक्तिदार्ढ्यमुदिते सन्दर्श्य रूपं निजं
तद्देशो निरवग्रहोऽस्त्विति गते दत्त्वा वरं योगिने।

---

## २४. सुखावह लीला

बारह वर्ष तक यह पृथ्वी अवग्रह (अनावृष्टि) से पीडित रहेगी, यह जानकर भय के मारे गौतम मुनि दण्डक वन में जाकर तपस्या करने लगे कि यह पृथ्वी अनावृष्टि के भय से मुक्त हो जाय। इनकी परीक्षा करने के अभिप्राय से शिव गौतम मुनि के सामने विष्णु का नकली स्वरूप धारण कर विनोद में ही उनको ठगने के लिये उलटी-सीधी बात बनाने लगे॥८८॥

वे बोले कि कपालपात्र धारण करने वाले शिव की सेवा करने से तुम्हें क्या मिलने वाला है? लक्ष्मी के पति, इस जगत् के रक्षक विष्णु से ही सबको मनोवांछित फल मिल पाता है। प्रमाण के रूप में उन्होंने अपने ललाट पर भी तृतीय नेत्र को दिखाया। इस पर मुनि गौतम तरह-तरह से उनको धिक्कारते हुए बोले कि भगवान् शिव ही सर्वश्रेष्ठ है। ऐसा कहते हुए गौतम मुनि ने अपने चरणों में उनको नेत्र दिखा गया॥८९॥

भगवान् शिव मुनि गौतम की अपने प्रति इस प्रकार की दृढ भक्ति को देखकर प्रसन्न हो गये और उनको अपना स्वरूप दिखाकर कहा कि यह स्थान अनावृष्टि के भय से मुक्त रहेगा। भगवान् शिव योगी गौतम को इस प्रकार का वर दे गये हैं, इस बात को सुनकर सभी ऋषिगण उस अकाल के समय

**तच्छ्रुत्वा मुनिमेत्य सर्व ऋषयस्तत्पोषिता अप्यहो**
**अन्ते द्रोहकृतो मुनीन्द्रशपनात् पाषण्डितां प्रापयुः ।।९०।।**

**कैश्चित् काश्यपपूर्वकैस्तदितरैस्तद्योगिभिः प्रार्थितः**
**शम्भुर्नन्दिमुखाद् रहस्यमखिलं शैवागमानां क्षितौ ।**
**तत्पाषण्डिमुनिव्रजस्य दयया प्राबोध्य यः सद्गतिं**
**प्रादात् सर्वसुखावहः स गिरिशो दद्यात् सुखं नः सदा ।।९१।।**

## २५. पार्थास्त्रप्रदानलीला

**पार्थे व्यासगिरा पुरा हिमगिरौ तीव्रं तपः कुर्वति**
**तज्ज्वालापरितप्यमानमखिलं लोकं हरो नारदात् ।**
**ज्ञात्वा दातुमभीष्टमस्य शबराकारोऽनुगैश्चोमया**
**स्वाकारैर्मृगयोचितोपकरणैर्युक्तो हिमाद्रिं ययौ ।।९२।।**

---

उनके पास चले आये। उनसे भरण-पोषण पाने पर भी यह आश्चर्य की ही बात है कि ये उन्हीं से द्रोह कर बैठे। कुपित हो मुनि ने उनको शाप दे दिया, जिसके कारण ये सब पाखंडी बन गये।।९०।।

इस स्थिति में काश्यप आदि ऋषियों तथा अन्य अनेक योगियों की प्रार्थना पर भगवान् शिव ने नन्दी के माध्यम से इस पृथ्वी पर शैवागमों के समस्त रहस्य को खोल दिया। इन्हीं शैवागमों की सहायता से उन पांखडी मुनियों पर भी दया कर उनकी सद्गति के लिये भगवान् शिव ने सर्वसुखावह स्वरूप धारण किया। वे गिरीश हम सबको सदा सुख प्रदान करें।।९१।।

## २५. पार्थास्त्रप्रदान लीला

महाभारत युद्ध के समय व्यास मुनि के कहने पर अर्जुन हिमालय पर पाशुपतास्त्र की प्राप्ति के लिये तीव्र तपस्या करने लगे। नारद मुनि के कहने पर भगवान् शिव को ज्ञात हुआ कि अर्जुन की तपस्या से समस्त लोक उसके ताप से पीडित है। अर्जुन को अभीष्ट पाशुपतास्त्र देने के अभिप्राय से भगवान् शिव ने शबर का वेष धारण कर लिया। अपने गणों और उमा भगवती को भी शिकारी परिवार का वेष धारण कराया। फिर शिकारी कुत्तों आदि को साथ लेकर हिमालय के वन में प्रवेश किया।।९२।।

